॥ तत्त्वार्यास्तवः ॥

शिवकामसुन्दरीशं शिवगङ्गातीरकल्पितनिवेशम् ।
शिवमाश्रये द्युकेशं शिवमिच्छन्मा वपुष्यभिनिवेशम् ॥ १॥

गीर्वाणचक्रवर्ती गीश्चेतोमार्गदूरतोवर्ती ।
भक्ताशयानुवर्ती भवतु नटेशोऽखिलामयनिवर्ती ॥ २॥

वैयाघ्रपादभाग्यं वैयाघ्रं चर्म कंचन वसानम् ।
वैयाकरणफणीड्यं वैयासिक्या गिरा स्तुतं प्रणुमः ॥ ३॥

हाटकसभानिवासः शाटकतापन्नसकलहरिदन्तः ।
घोटकनिगमो मायानाटकसाक्षी जगत्पतिर्जयति ॥ ४॥

शैलूषराजमाद्यं मालूरप्रसवमालिकाभरणम् ।
पीलूपमोऽन्धुजीर्यच्छालूराभः कथं विजानीयाम् ॥ ५॥

कनकसभैकनिकेतं कठिनपुराणोक्तिसारसंकेतम् ।
नाराधयन्ति के तं नारायण्या युतं स्वतोकेतम् ॥ ६॥

तिल्लवने क्षुल्लवने पल्लवसंभिन्नफुल्लपुष्पघने ।
चिल्लहरीमुल्ललयन् वल्लभया भिल्लतल्लजो नटति ॥ ७॥

वैराजहृत्सरोजे वैराजाद्यैः स सामभिः स्तव्यः ।
वैराग्यादिगुणाढ्यैः वैराद्युत्सृज्य दृश्यते नृत्यन् ॥ ८॥

ढक्कानिनदैः सूत्राण्यङ्गदनादैरहो महद्भाष्यम् ।
व्याकरणस्य विवृण्वन् नृत्यति भृत्यान् कृतार्थयन् मर्त्यान् ॥ ९॥

नटनायक नटनाय क इह सुकृती नो तव स्पृहयेत् ।
मन्ऽजुलतामञ्जुलतामहिते वस्तुं च तिल्लवने ॥ १०॥

अतिदुरितोत्तारकृते चिरधृतहर्षः सभापतिः सद्यः ।
अगणेयाघघनं मामासाद्यानन्दमेदुरो नटति ॥ ११॥

मत्पादलग्नजनतामुद्धर्तास्मीति चित्सभानाथः ।
ताण्डवमिषोद्धृतैकसवाङ्घ्रिः सर्वान् विबोधयति ॥ १२॥

आपन्नलोकपालिनि कपालिनि स्त्रीकृताङ्गपालिनि मे ।
शमितविधिश्रीशरणे शरणा धीरस्तु चित्सभाशरणे ॥ १३॥

भिक्षुर्महेश्वरोऽपि श्रुत्या प्रोक्तः शिवोऽप्युग्रः ।
अपि भवहारी च भवो नटोऽपि चित्रं सभानाथः ॥ १४॥

नृत्यन्नटेशमौलित्वङ्गद्गङ्गातरङ्गशीकरिणः ।
भूषाहिपीतशिष्टाः पुनन्तु मां तिल्लवनवाताः ॥ १५॥

कनकसभासम्राजो नटनारम्भे झलंझलंझलिति ।
मञ्जीरमञ्जुनिनदा ध्वनियुः श्रोत्रे कदा नु मम ॥ १६॥

पर्वतराजतनूजाकुचतटसंक्रान्तकुङ्कुमोन्मिश्राः ।
नटनार्भटीविधूता भूतिकणास्ते स्पृशेयुरपि मेऽङ्गम् ॥ १७॥

नटनोच्चलत्कपालामर्दितचन्द्रक्षरत्सुधामिलिताः ।
आदिनटमौलितटिनीपृषतो गोत्रेऽत्र मे स्खलेयुः किम् ॥ १८॥

पश्यानि सभाधीशं कदा नु तं मूर्धनि सभाधीशम् ।
यः क्षयरसिकं कालं जितवान् धत्ते च शिरसि कङ्कालम् ॥ १९॥

तनुजायातनुजायासक्तानां दुर्लभं सभानाथम् ।
नगतनया नगतनया वशयति दत्त्वा शरीरार्धम् ॥ २०॥

आनन्दताण्डवं यस्तवेश पश्येन्न चापि नृगणे यः ।
स च स च न चन्द्रमौले विद्वद्भिर्जन्मवत्सु विगणेयः ॥ २१॥

कामपरवशं कृत्वा कामपरवशं त्वकृत्वा माम् ।
कनकसभां गमयसि रे कनकसभां हा न यापयसि ॥ २२॥

नटनं विहाय शंभोर्घटनं पीनस्तनीभिराशास्से ।
अटनं भवे दुरन्ते विट नन्दसि न स्वभूमसुखम् ॥ २३॥

कलितभवलङ्घनानां किं करैव चित्सुखघनानाम् ।
सुमुदां सापघनानां शिवकामेश्याः कृपामृतघनानाम् ॥ २४॥

निनिलीये मायायां न विलिये वा शुचा परं लीये ।
आनन्दसीमनि लसत्तिल्लवनीधामनि स्वभूमनि तु ॥ २५॥

अधिहेमसभं प्रसभं बिसभङ्गवदान्यधन्यरुचम् ।
श्रुतगलगरलं सरलं निरतं भक्तावने भजे देवम् ॥ २६॥

सभया चित्सभयासीन्माया मायाप्रबोधशीतरुचेः ।
सुहिता धीः सुहिता मे सोमा सोमार्धधारिणी मूर्तिः ॥ २७॥

पत्या हेमसभायाः सत्यानन्दैकचिद्वपुषा ।
कत्यार्ता न त्राता नृत्यायत्तेन मादृशा मर्त्याः ॥ २८॥

भजतां मुमुक्षया त्वां नटेश लभयास्त्रयः पुमर्थाश्च ।
फललिप्सयाम्रभाजां छायासौरभ्यमाधव्य इव ॥ २९॥

कञ्चुकपञ्चकनद्धं नटयसि मां किं नटेश नाटयसि ।
नटसि निरावृतिसुखितो जहि मायां त्वादृशोऽहमपि तत् स्याम् ॥ ३०॥

आस्तां नटेश तद्यन्नटति भवानम्बरे निरालम्बे ।
त्वन्नटनेऽपि हि नटनं वेदपुरानागमाः समादधति ॥ ३१॥

वेधसि सर्वाधीशेऽमेधसि वा मादृशे सरूपकृता ।
रोधसि शिवगङ्गाया बोधसिरा काचिदुल्लसति ॥ ३२॥

हट्टायितं विमुक्तेः कुट्टाकं तं भजामि मायायाः ।
भट्टारकं सभायाः किट्टात्मन्यङ्गके त्यजन्ममताम् ॥ ३३॥

श्रीमच्चिदम्बरेशादन्यत्रानन्दताण्डवासक्तात् ।
ब्राह्मं लक्षणमास्ते कुत्रचिदानन्दरूपता देवे ॥ ३४॥

क्षुल्लककामकृतेऽपि त्वत्सेवा स्याद्विमुक्तिमपि दात्री ।
पीतामृतोऽप्युदन्याशान्त्यै स्याच्चित्सभाधिपामर्त्यः ॥ ३५॥

सत्यं सत्यं गत्यन्तरमुत्सृज्य ते पदापात्यम् ।
अत्यन्तार्तं भृत्यं न त्यज नित्यं नटेश मां पाहि ॥ ३६॥

षट्त्रिंशता तत्त्वमयीभिराभिः सोपानभूताभिरुमासहायम् ।
आर्याभिराद्यं परतत्त्वभूतं चिदम्बरानन्दनटं भजध्वम् ॥ ३७॥

॥ इति श्रीतत्त्वार्यास्तवः सम्पूर्णः ॥